*महाराजा श्री स्वाति तिरुनाळ् विरचिता*

# मुहनाप्रासान्त्यप्राससव्यवस्था

Typeset by P. P. Narayanaswami



SOURCE:

"**Sri Swati Tirunal — His Life and works** (in Malayalam), Edition, Translation and Study by **Dr. V. S. Sharma**, The National Book Stall, Kottayam(1985).

Also consulted:

"**Muhanaprāsāntyaprāsa Vyavasthā**" of Śrī Svāti Tirunāḷ Rāma Varma, The Music Academy, Madras (1985). (Textual variations are indicated in the footnotes, with the label **MA (1985)**.)

॥ श्रीः ॥

स्वाति श्रीरामवर्म कुलशेखरवञ्चिमहाराजप्रणीता

# ॥ *मुहनाप्रासान्त्यप्रासव्यवस्था* ॥

सङ्गीतविषयासु साहितीषु प्रयुज्यमानाऽशब्दालङ्काराः मुहनाप्रासान्त्यप्रासा इति त्रिधा व्यवह्रियन्ते ।तेषां त्रयाणामपि नियमाः वक्ष्यमाणया व्यवस्थया सुतरामवदाताः स्युः । अथ पूर्वोक्तानामेषां मुहनाप्रासादि शब्दालङ्काराणां नियमेषु आन्ध्रद्राविडादि भाषासु सलक्षणं विद्यमानेष्वपि व्याकरणसिद्धस्य गीर्वाणस्य रीतेः एषां[1] केषाञ्चित् क्वचित् क्वचिद्व्यदिचरितत्यात्[2] शेषरामानुजाख्यकवेः कृतीणां गीर्वाणैकपरत्वाच्च तेन कविना ये ये नियमाः प्रयुक्तास्त एवात्र स्वीकर्तव्याः ॥

[3]अथ यस्य कस्यचित् कीर्तनस्य वा पदस्य वा वर्णस्य वा आदौ दृश्यमानो वर्णो, यद्वा वक्ष्यमाणव्यवस्थानुसारेण तस्मिन् स्थान एव प्रयोक्तुमर्हं वर्णान्तरं वा यदा द्वितीयावर्तस्यादौ प्रयुक्तं भवति, तदा तस्य मुहना इति संज्ञा ।तत्र च अजिति व्यवह्रियमाणेषु अकारादि षोडशवर्णेषु स्वयमेव वा हला सह मिळित्वा वा प्रयोक्तव्येषु तदर्थमपेक्षितां व्यवस्थां ब्रूमः ॥

प्रथमतः अकारस्य आकारश्च ऐकारश्च औकारश्च हकारश्च मुहनात्वेन प्रयोक्तव्यः तत्र अकारस्य मुहनात्वेन आकारः प्रयोक्तव्यः इत्यस्य पक्षस्य साधारणत्वाच्च युक्तिभिः प्रमाणबाहुल्येन च सर्वसम्मतत्वाच्च उदाहरणापेक्षाभावात् अवशिष्टानां त्रयाणामपि पृथक् पृथगुदाहरणं ब्रूमः कथमिते चेत् —

---

[1]MA (1985) येषां

[2]MA (1985) क्वचित्क्वचिद्व्यभिचरितत्वात्

[3]MA (1985) organizes the material into four sections, with the section title **I** appearing here.

“परमकृपारसपूर्णनेत्रं श्री-
वैकुण्ठवल्लीकळत्रम्”

इत्येकस्मिन् कीर्तने प्रयोगः ।

“चरणनिहतशकटासुर ! निरुपमशौर्य !”

इत्येकत्र प्रयोगः

“अतुलितलावण्यनिदान ! मनोहरमाल्य -
सुगन्ध ! ”

इत्येकत्र प्रयोगः ।

इकारस्य ईकारश्च एकारश्च ऋकारश्च मुहनात्वेन प्रयोक्तव्यः । तत्रापि इकारस्य ईकारः प्रयोक्तव्य इत्यस्य पक्षस्य उदाहरणापेक्षाभावात् अवशिष्टस्य पक्षद्वयस्याप्युदाहरणं —

“देहि तव पदकमलभक्तिमनपायिनीं
दीनवत्सल ! ”

इत्येकत्र प्रयोगः ।

“दिनकरकुलदीप !
धृतदिव्यशरचाप !”

इत्येकत्र प्रयोगः ।

उकारस्य ऊकारश्च ओकारश्च प्रयोक्तव्यः ।

तस्योदाहरणं —

“कुमुदारिप्रतापमोहन !
गोपबालरूप !”

इत्येकत्र प्रयोगः ।

ऌकारस्य ॡकारस्य च अक्षराभ्यासवेलायां व्याकरणशास्त्रे च उपयोगं विना अन्यत्र कुत्रापि कवितादिषु अनुपयुक्तत्वात् तयोर्वर्णयोः प्रसंग एवात्र निरर्थकः ।

अकारस्य हकारोऽपि प्रयोक्तव्य इत्येकः पक्षः पूर्वमुदाहृतः खलु । विशिष्य येना चा सह स्थितिः तेनैव अजक्षरेण सह संयुज्य वा उत पूर्वमुक्तव्यवस्थानुसारेण तत्सजातीयेन अक्षरान्तरेण सह वा संयुज्यायं हकारस्तु प्रयोक्तव्यः । अथैतत् साधयितुं उदाहरणान्यपि बहूनि सन्ति ॥

अथ मुहनप्रयोगे हलिति व्यवह्रियमाणककाराद्यक्षरान्तर्भूते वर्गपञ्चके तु एकैकस्मिन् वर्गे पञ्चमं वर्णं विहाय अवशिष्टाश्चत्वारोऽपि[4] वर्णास्तु मिथो मुहनात्वेन प्रयोक्तव्याः । पञ्चम एव वर्णो यदा प्रारंभे प्रयुक्तः स्यात् तदा तमेव वर्णं विना तस्य मुहनात्वेन स्ववर्ग्यमपि वर्णान्तरं न प्रयोक्तव्यम् ॥

शकारषकारसकाराः वर्गपञ्चकव्यतिरिक्तवर्णा अपि चवर्गे पञ्चमं वर्णं विहाय अवशिष्टस्य वर्णचतुष्टयस्य मुहनात्वेन प्रयोक्तव्य इत्यस्य पक्षस्य एकस्य उदाहरणे प्रदर्शिते शेषं तद्वदिति निश्चेतुं शक्यत्वात् एकस्योदाहरणं ब्रूमः । कथमिति चेत् —

> “सारसदलनेत्र ! जगन्नुत !
> जलधरनिभगात्र !”

इत्येकत्र प्रयोगः ।

बवयोरभे[5] इत्यनेन वकारस्य पवर्गे पञ्चमं वर्णं विहायान्ये चत्वारोऽपि वर्णाः मुहनात्वेन प्रयोक्तव्याः तस्योदाहरणं —

> “वाहिनीशमदविदारक ! निरयतारक !!
> पालितसूर्यकुमारक !”

---

[4]MA (1985) अवशिष्टश्चत्वारोऽपि

[5]This could be बवयोरभेद, and might be an obvious typo in the Malayalam edition. MA (1985) वबयोरभेद

इत्येकत्र प्रयोगः ।

रेफस्य लकारो मुहनात्वेन प्रयोक्तव्यः ।तस्योदाहरणम् —

“रमणीयसुगुणालवालं सुमध्यमभागलसमान”

इत्येकत्र प्रयोगः ।

अकारस्य हकारवद्यकारोऽपि मुहनात्वेन प्रयोक्तव्य इत्येकः पक्षः तस्योदाहरणमुपरिष्टाद्वक्ष्यामः ।

संयुक्ताक्षरस्य मुहनाप्रयोगे आदिश्रुतो वा यद्वा अन्तश्रुतो वर्णः अभेदन प्रयोक्तुमर्ह एव तयोरुदाहरणम् —

“श्रीरङ्गशायिनं सकल-
शुभदायिनं चिन्तयेऽहम् ”

इत्येकत्र,

“क्षतजमूर्च्छितदशग्रीवम्”[6]

इत्यन्यत्र प्रयोगः ।

अकारस्य मुहनातेन्न यकारोऽपि प्रयोक्तव्य इति पूर्वमभिहितस्य पक्षस्योदाहरणं —

“अनुपमल्लवगपरिवार ! हृदयसौ -
ख्यद ! हनूमद्वचनसार !”

इत्येकत्र प्रयोगः ।

तर्हि अकारस्य मुहनात्वेन खकारस्यासंभवात् तेन खकारेण सह यकारस्य संयुक्तत्वाच्च स पक्ष, अत्र सिद्धः ॥

अपि च यदा एक एव शब्दश्चरणान्तेषु सर्वत्रापि विवक्षितः स्यात्तदा यादृशे वर्णे प्रयुक्ते विवक्षित शब्दाद्यस्थितवर्णोऽस्य मुहनात्वेन परिणमेत् तादृशो वर्णस्तु तत्पूर्वस्थितावर्ते

[6] MA (1985) मूर्च्छित

प्रयोक्तव्यः । तस्योदाहरणम् — "जय सुगुणाशय"[7] इत्यस्मिन् कीर्तने "नरसिंह" इत्ययं शब्दः चरणान्तेषु सर्वत्रापि विवक्षितः । अतः यथा प्रयुक्ते तच्छब्दाद्यक्षरो मुहनात्वेन परिणमेत् तथा नकारः अथवा णकारः सर्वेष्वपि चरणेषु प्रयुक्त इत्यस्य द्वयोरुदाहरणे प्रदर्शिते शेषं तद्वदिति निर्णेतुं शक्यत्वात्तदिह ब्रूमः । कथमिति चेत् —

दी-
नशरण्य ! श्री
नरसिंह !

इत्येकत्र,

"अ-
नघचरित्र ! श्री
नरसिंह !"

इत्यन्यत्र प्रयोगः ।

नकार्सय णकारो मुहनात्वेन प्रयोक्तव्यः । तस्योदाहरणम् —

"नीरदनीलशरीर ! पाहि धरणीसुतासहाय !"

इत्येकत्र प्रयोगः ।

चरणेषु मुहनाप्रासौ मिळित्वा प्रयोक्तव्यौ । कथमिति चेत् — प्रयुक्तस्य शब्दस्य द्वितीयावर्ते मुहना, पुनः प्रासः, पुनर्मुहना, पुनः प्रास इत्ययं प्रयोगक्रमः । एकस्मिन् चरणे प्रासमय एवाद्यन्तपर्यन्तं प्रयोगो युक्तः । न तथा मुहनामात्रः ॥

[8]अथ प्रासनियमं वक्ष्यामः । कथमिति चेत् — आदौ प्रयुक्तस्य शब्दस्य द्वितीयवर्णो यदा द्वितीयावर्ते तथैव प्रयुक्तः स्यात् तदा तस्य प्रास इति संज्ञा । तस्य तु हलक्षरनियमं

[7]MA (1985) सुगुणालय
[8]MA (1985) inserts the section title **II** here.

विना अजक्षरनियमो नास्त्येव ।तथापि लळयोरभेद इत्यनेन लकारस्य ळकारस्तु प्रासत्वेन प्रयोक्तव्यः ।प्रासस्य संयुक्ताक्षरे प्रयुक्ते समारब्धचरणातपर्यन्तं तस्य संयुक्तस्य हलक्षरस्य व्यत्ययो न कार्यः । चरणस्य वा पल्लवस्य वा प्रारंभे प्रयुक्तो वर्णः "विमलकमल" इत्यादिवत् ह्रस्वरूपश्चेत् तस्य 'कामितसामज' इत्यादीनि दीर्घाक्षररूपेण प्रासपूर्वाक्षरप्रयोगो न स्यात् ।प्रासस्तु वर्णद्वयपरिमितो वा ततोऽप्यधिको वा यथाविवक्षं प्रयोक्तव्यः ।तस्योदाहरणम् —

"तनुजशरण ! प-
वनजमुखपरि-
जन ! जगदहित-
दनुजमदहर !
मनुजतनुधर !
वनजदलनयन !"

इत्येकत्र प्रयोगः ।

[9]अथान्त्यप्रासनियमान् वक्ष्यामः ।कथमिति चेत् — एकस्मिन् चरणे सर्वेऽप्यन्त्यप्रासाः समाः प्रयोक्तव्याः ।तर्हि प्रासस्य तु हलक्षरनियमं विना अजक्षरनियमो नास्तीति यत् पूर्वमभ्यधायि अन्त्यप्रासस्यैवं न, अजक्षरस्य च हलक्षरस्य चैवमुभयोरपि नियमौ संयगपेक्षितौ ।कथमिति चेत् — "नेत्रं" इत्येकः शब्द अन्त्यप्रासरूपेण प्रयुक्तश्चेत् तस्य "गात्रं" "सूत्रं" इत्यादि रूपेणैव प्रयोग उचितः । अथैतद्विहाय "शत्रुं" "अत्रिं" इत्यादिवदजक्षरस्य वा "रक्तं" "शक्तं" इत्यादिवद्धलक्षरस्य वा व्यत्ययौ न कार्यौ ॥

किञ्च एकस्मिन् कीर्तने आद्यन्तपर्यन्तं एकस्यैव अन्त्यप्रासस्य प्रयोगोऽपि युक्त एव । तस्योदाहरणम्— "श्रीरघुवर ! सुगुणालय ! " इत्यसिन् कीर्तने प्रथमतः

[9]MA (1985) inserts the section title **III** here.

“पुरहरचिन्त्यनामधेय !”

इत्यन्त्यप्रासं प्रयुज्य पुनः तस्मिन् कीर्तने स्थितेषु सर्वेष्वपि चरणेषु अन्त्यप्रासाक्षरीभूतो यकार एव प्रयुक्तो दृश्यते ॥

अन्त्यप्रासस्त्वक्षरद्वयपरिमितोऽपि प्रयोक्तव्यः । तत्राप्यजक्षरस्य वा हलक्षरस्य वा व्यत्ययो न कार्यः ।तस्योदाहरणम् —

“कलये

तावकीन चरणकिसलये ”

इत्येकत्र प्रयोगः ।ननु अयं अन्त्यप्रासो न, अपि तु प्रास एवेति शङ्कायां उत्पन्नायां प्रासस्य हलक्षरनियमं विना अजक्षरनियमस्याभावात्, अत्र तु उभयोरपि नियमस्य दरीदृश्यमानत्वाच्चायमन्त्यप्रास इत्येव निश्चयः कार्यः ॥

अन्त्यप्रासस्त्वक्षरत्रयपरिमितो वा ततोऽप्यधिको वा यथाविवक्षं प्रयोक्तव्यः । चरणान्तेष्वेवान्त्यप्रासद्वयप्रयोगोऽपि युक्तः ।तस्योदाहरणम् —

“वनजदलनयन!

अवितमुनिसवन !”

इत्येकत्र प्रयोगः ।

अनुपल्लवारंभः पल्लवाद्यस्थितशब्दप्रासाक्षरीभूतः स्यात् ।चरणे प्रासारंभो विवक्षानुसारः ।

एकस्मिन्नेव चरणे चरणपूर्वोत्तरार्थयोः[10] प्रासव्यत्ययो दृश्यते । तथाप्येतत् साधयितुं प्रयोगबहुल्यस्यादृश्यमानत्वान्मुख्यतयात्र न स्वीकार्यः ।तस्योदाहरणम् —

“करुणाकृत

शरणागत

भरण ! ”

[10] MA (1985) पूर्वोत्तरार्धयोः

इत्यादौ प्रासमारभ्य चरणार्थोपरि

“ अनपराधि-
जनविरोधि -
खरदूषण -
विराधगुरु-
धराधराळिकुलिश ! ”

इति प्रयोगो दृश्यते ॥

एकस्मिन्नेवावर्ते द्वावन्त्यप्रासावपि, प्रयोक्तव्यौ ।तस्योदाहरणम् —

“ चन्द्रकुलवतंस ! दमितकंस ! परमहंसार्चित ! ”

इत्येकत्र प्रयोगः ॥

[11]अथ अन्तरुक्तिरिति काचित् व्यवस्था ।तस्या नियमान्वक्ष्यामः । कथमिति चेत् — अस्याः अन्तरुक्तेस्तु पूर्वोक्ताः प्रासादिनियमाः केऽपि न सन्ति । अन्तरुक्तिस्तु यः कश्चिच्छब्दः प्रयुक्तश्चेत् द्वितीयावर्तादौ पूर्वोक्तव्यवस्थानुसारेण मुहना वा प्रासो वा प्रयोक्तव्यः खलु ।तर्हि तयोरुभयोर्मध्ये ताळपूरणार्थं पृथक् प्रयुज्यमानत्वादेव तस्या अन्तरुक्तिरिति संज्ञा ।इयं अन्तरुक्तिः पल्लवे एव वा अनुपल्लवे चरणेषु वा यथा विवक्षं प्रयोक्तव्या ।एकस्मिन् चरणे एकत्र वा सर्वत्रापि वा अन्तरुक्तिः प्रयुक्ता चेत् सा व्यवस्था चरणान्तरेष्वपि तथैव अवलंब्या ।अन्तरुक्तिस्तु प्रथमतः प्रयुक्तस्य शब्दस्य च तस्य मुहनात्वेन वा प्रयुज्यमानस्य शब्दस्य च एवं उभयोरपि मध्ये प्रयोक्तव्येति यत् पूर्वमुदीरितं तस्योदाहरणं — “हनुमन्तं चिन्तयेऽहम्” इत्यस्मिन् कीर्तने अनुपल्लवे तु “पावन” इति प्रासप्रयोगो दृश्यते ।तदा “हनू” इत्यस्य शब्दस्य “पावन” इति प्रयुक्ते पूर्वोक्तप्रासनियमस्य सुतरां विरोधस्य प्रत्यक्षत्वात् “पा” इत्ययं वर्णः अन्तरुक्तिरिति

[11]MA (1985) inserts the section title **IV** here.

ज्ञेया ।तदा “हनू” इत्यस्य शब्दस्य “वन” इत्ययं शब्दः प्रासाक्षरीभूतः स्यात् । अन्तरुक्तिस्तु एकद्वित्र्यक्षरपरिमिता ताळे यथावकाशं प्रयोक्तव्या ॥

॥ इति श्री स्वाति रामवर्म कुलशेखर वञ्चिमहाराजप्रणीता

मुहनप्रासान्त्यप्रासव्यवस्था

समाप्ता ॥

✠ ✠ ✠ ✠ ✠